वर्णाङ्काहतिरूपैक्यं भक्त्वेष्टेनेष्टतत्फले ।
एताभ्यां संयुतावूनौ कर्तव्यौ स्वेच्छया च तौ ॥ ३ ॥
वर्णाङ्कौ वर्णयोर्माने ज्ञातव्ये ते विपर्ययात् ।

समयोः पक्षयोरेकस्माद्भावितमपास्यान्यतो वर्णौ रूपाणि च ततो भाविताङ्केन पक्षावपवर्त्य द्वितीयपक्षे वर्णाङ्कयोर्घातं रूपयुतं केनचिदिष्टेन विभज्य तदिष्टं तत्फलं च द्वे अपि वर्णाङ्काभ्यां स्वेच्छया युक्ते सती वर्णयोर्माने विपर्ययेण ज्ञातव्ये । यत्र कालकाङ्को योजित-स्तद्यावत्तावन्मानं यत्र यावत्तावदङ्कस्तत्कालकमानमित्यर्थः । यत्र तु इयत्ताघशादेवं कृते सत्यालापो न घटते तत्रेष्टफलाभ्यां वर्णाङ्कावूनितौ व्यत्ययान्माने भवतः ।

अथ प्रथमोदाहरणम् ।

चतुस्त्रिगुणयो राश्योः संयुतिर्द्वियुता तयोः ।
राशिघातेन तुल्येति ॥

तत्र यथोक्ते कृते पक्षौ $\left\{\begin{array}{l}\text{या ४ का ३ रू २} \\ \text{या.का.भा १}\end{array}\right.$ । वर्णाङ्काहतिरूपैक्यम् १४ एतदेकेनेष्टेन हृतं जाते इष्टफले १, १४ । एते वर्णाङ्काभ्यां ४, ३ स्वेच्छया युते जाते यावत्तावत्कालकमाने ५, १८ वा १७, ५ । द्विकेन ५, ११ वा १०, ६ ।

अस्योपपत्तिः । सा च द्विधा सर्वत्र स्यादेका क्षेत्रगताऽन्या राशिगतेति । तत्र क्षेत्रगतोच्यते । द्वितीयपक्षः किल भावितसमो वर्तते भावितं स्यायतचतुरस्रक्षेत्रफलं तत्र वर्णौ भुजकोटी ।

---

=इ.नी+इ ई+ई. पी+ई. इ+रु

समशोधनेन नी.पी=इ. ई+रु

ततः पी$=\dfrac{\text{इ. ई+रु}}{\text{नी}}$, अत्र नीलकस्य तथाऽभिन्नं मानं कल्प्यं यथा पीतकमा-नमभिन्नं स्यात् । ततो नीलकपीतकमानाभ्यामुत्थापनेन यावत्तावत्कालकमाने भवतः । यदि इ.ई+रु इदं धनात्मकं भवेत् तदा नीलकस्य ऋणमानकल्पने पीतकस्यापि ऋणमानमागच्छेत् तदा

या=ई−नी । का=इ−पी । एतेन सर्वं मूलोक्तं पद्यमुपपद्यते ।




अत्र क्षेत्रान्तर्यावत्तावच्चतुष्टयं वर्तते कालकत्रयं द्वे च रूपे । अतः क्षेत्रायावत्तावच्चतुष्टये रूपचतुष्टयोनका-*लके स्वाङ्कगुणे चापनीते जातम् (१)।




द्वितीयपक्षे च तथा कृते जातम् १४ । एतद्भावितक्षेत्रान्तर्वर्तिनोऽवशिष्टक्षेत्रस्याधस्तनस्य फलं तद्भुजकोटिघाताज्जातम्। ते चात्र ज्ञातव्ये।

अत इष्टो भुजः कल्पितस्तेन फलेऽस्मिन् १४ भक्ते कोटिर्लभ्यते अनयोर्भुजकोट्योरेकतरा यावत्तावदङ्कतुल्यैः रूपैः ४ अधिकतरा सती भावितक्षेत्रस्य कोटिर्भवति यतो भावितक्षेत्राद्यावच्चतुष्टयेऽपनीते तत्कोटिश्चतुरूना जाता। एवं कालकतुल्यैः रूपैः ३ अधिकतरो भुजो भवति ते एव यावत्तावत्कालकमाने।

---

* अत्र मूले लेखकाध्यापकाध्येतृदोषैः काचित् त्रुटि(१)रस्ति तदर्थं कृष्णदैवज्ञकृता नवाङ्कुराख्या बीजगणितटीका विलोक्या।

(१) वि० श०—स्पष्टार्थं कल्प्यते यथा भु=या, को=का। एते भावितक्षेत्रस्य भुजकोटी इति। अत भा.क्षे.फ.=या. का। अस्मात् क्षेत्राद्यदि ४ या, ३ (का—४) एतद्द्वयं विशोध्यते शेषमानम्=या. का—४या—३ (का—४)= (या—३) (का—४)। अत्र या. का=४या+३ का+२।

अतः शेषमानम्=(४या+३का+२)—४या—३का+१२=१४

एतद् वर्णाङ्कघातेन रूपयुतेन वर्ग. चैअं +रू अनेन समानमिति।

---

(१) वि० श०—"रूपचतुष्टयोनकालके स्वाङ्कगुणे" वा "कालके रूपचतुष्टयोनेऽथ स्वाङ्कगुणे" इह न काचित् त्रुटिरस्ति। वस्तुतो नवाङ्कुरटीकाकारस्य कृष्णदैवज्ञस्य वाक्यबाहुल्यतोऽन्यत् किमपि न सारमिति विशेषविवेचनीयम्।

अथ राशिगतोपपत्तिरुच्यते साऽपि क्षेत्रमूलान्तर्भूता । तत्र यावत्तावत्कालकभुजकोटिमानात्मकक्षेत्रान्तर्गतस्य लघुक्षेत्रस्य भुजकोटिमाने अन्यवर्णौ कल्पितौ नी १, पी १ । अत एतयोरेकतरो(१)यावत्तावदङ्कतुल्यैः रूपैरधिको बहिःक्षेत्रकोटेः कालकस्य मानम् । अन्यः कालकतुल्यैः रूपैरधिको भुजस्य यावत्तावतो मानं कल्पितम् । का=नी १ रू४, या=पी १ रू ३ । आभ्यां पक्षयोर्यावत्तावत्कालकवर्णावुत्थाप्योपरितनपक्षे नी ३ पी ४ रू २६ ।

भावितपक्षे च नी. पी. भा १ । नी ३ पी ४ रू १२ । एतयोः समशोधने कृते जातमधः नी. पी. भा १ । ऊर्ध्वपक्षे रू १४ ।

इदमेव तदन्तःक्षेत्रफलमेतद्वर्णाङ्कयोर्घातस्य रूपयुतस्य समं स्यादतो वर्णमाने भवतस्तत् प्रागुक्तमेव । इयमेव क्रिया पूर्वाचार्यैः संक्षिप्तपाठेन निबद्धा । ये क्षेत्रगतामुपपत्तिं न बुध्यन्ति तेषामियं राशिगता दर्शनीया ।

उपपत्तियुतं बीजगणितं गणका जगुः ।
न चेदेवं विशेषोऽस्ति न पाटीबीजयोर्यतः ॥

अत इयं भावितोपपत्तिर्द्विविधा दर्शिता । यत् तूक्तं वर्णाङ्कयोर्घातो रूपैर्युतो भावितक्षेत्रान्तर्वर्त्तिनोऽन्यक्षेत्रस्य कोणस्थस्य फलमिति तत् क्वचिदन्यथा स्यात् । यथा वर्णाङ्कौ ऋणगतौ भवतस्तदा तस्यैवान्तर्भावितक्षेत्रं कोणे दृश्यते यदा तु भावितक्षेत्रे भुजकोटिभ्यां वर्णाङ्कावधिकौ धनगतौ भवतस्तदा भावितक्षेत्राद्बहिःकोणस्थं क्षेत्रं स्यात् तद्यथा ।




यदीदृशं तदेष्टफलाभ्यामूनितौ वर्णाङ्कौ यावत्तावत्कालकयोर्माने भवतः ।

(१) वि० श० एकतरो वर्ण इति ।

उदाहरणम् ।

द्विगुणेन कयोः राश्योर्घातेन सदृशं भवेत् ।
दशेन्द्रहतराश्यैक्यं ह्यूनपष्टिविवर्जितम् ॥ १ ॥

अत्र राशी या १, का १। अनयोर्यथोक्ते कृते भावितांङ्केन भक्ते जातम् या ५ का ७ रू २१। अत्र वर्णाङ्काहतिरूपैक्य ६ द्विहतमिष्टफले २, ३। आभ्यां वर्णाङ्कौ युतौ राशी १०, ७ वा ९, ८। वा ऊनितौ जातौ ४, ३ वा ५, २।

उदाहरणम्।

त्रिपञ्चगुणराशिभ्यां युतो राश्योर्वध. कयो·।
द्विपष्टिप्रमितो जातो राशि त्वं वेत्सि चेद्वद ॥ २ ॥

अत्र यथोक्ते कृते जातौ पक्षौ $\left\{ \begin{matrix} \text{या ३ का ५ रू ६२} \\ \text{या.का.भा} \end{matrix} \right.$ । वर्णाङ्काहतिरूपैक्यम् ७७। इष्टतत्फले ७, ११। आभ्यां वर्णाङ्कौ युतावेव कार्यौ इष्टतत्फलाभ्यामाभ्याम् ७, ११ ऊनितौ चेद्विधीयेते तदा ऋणगतौ भवतोऽत आभ्यां ७, ११ युतौ जातौ राशी ६, ४ वा २, ८। ऊनितौ १२, १४, वा १६, १०।

अथ पूर्वचतुर्थोदाहरणम् ।

यौ राशी किल या च राशिनिहतिर्यौ राशिवर्गौ तया
तेषामैक्यपदं सराशियुगलमिति ।

अत्र राशी या १, का १। अनयोर्घातयुतिवर्गाणां योगः

याव १ काव १ या का भा १ या १ का १। अस्य मूलाभावाद्राशिद्वयोमायात्रयोविंशते· या १ का १ रू २३ वर्गेणानेन याव १ काव १ या.का.भा २ या ४६ का ४६ रू ५२९, साम्यम्। तत्र समयोगवियोगादी समतैवेति समवर्गगमे शोधने च कृते भाविताङ्केन हृते जातम्—

या ४७ का ४७ रू ५२९। अत्र वर्णाङ्काहति रूपयुता १६८०। इयं चत्वारिंशतेष्टेन हृता फलम् ४२, इष्टम् ४०। अत्रेष्टफलाभ्यामाभ्यां वर्णाङ्कावूनावेव कार्यो तेन जातौ राशी ७, ५। युतौ चेत् क्रियेते तर्हि जाता त्रयोविंशतिरिति पूर्वलापो न घटते।

पूर्वोदाहरणम्। पञ्चाशत् त्रियुताऽथ वेति।

अत्रोदाहरणे यथोक्तकृतभाविताङ्केन विभक्ते जातम्
या १०७ का १०७रू २८०९ । अत्र वर्णाङ्काहतिरूपैक्यम् ८६४० ।
इष्टतःफले ९०, ९६ । आभ्यां वर्णाङ्कावूनितौ राशी ११, १७ ।
एवमन्यत्रापि ।

क्वचिद्बहुषु साम्येषु भावितोन्मितीरानीय ताभ्यः समीकृतच्छेदगमाभ्यः साम्ये पूर्वबीजक्रिययैव राशी ज्ञायेते । अत्र राशी इति द्विवचनादन्येषां ऽयादिवर्णानामिष्टानि मानानि कल्प्यानीत्यर्थात् सिद्धम् ।

इति श्रीभास्कराचार्यविरचिते बीजगणिते भावितं समाप्तम् ।



आसीन्महेश्वर इति प्रथितः पृथिव्या-
माचार्यवर्यपदवीं विदुषां प्रपन्नः ।
लब्ध्वाऽवबोधकलिकां तत एव चक्रे
तज्ज्ञेन बीजगणितं लघु भास्करेण ॥

ब्रह्माह्वयश्रीधरपद्मनाभबीजानि यस्मादतिविस्तृतानि ।
आदाय तत्सारमकारि नूनं सद्युक्तियुक्तं लघु शिष्यतुष्ट्यै ॥

अत्रानुष्टुप्सहस्रं हि ससूत्रोद्देशके मितिः ।
क्वचित् सूत्रार्थविषयं व्याप्तिं दर्शयितुं क्वचित् ॥

क्वचिच्च कल्पनाभेदं क्वचिद्युक्तिमुदाहृतम् ।
न ह्युदाहरणान्तोऽस्ति स्तोकमुक्तमिदं यतः ॥

दुस्तरः स्तोकबुद्धीनां शास्त्रविस्तारवारिधिः ।
अथवा शास्त्रविस्तृत्या किं कार्यं सुधियामपि ॥

उपदेशलवं शास्त्रं कुरुते धीमतो यतः ।
तत् तु प्राप्यैव विस्तारं स्वयमेवोपगच्छति ॥

यथोक्तं यन्त्राध्याये ।

जले तैलं खले गुह्यं पात्रे पानं मनागपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥

तथा गोले मयोक्तम्।

उल्लसदमलमतीनां त्रैराशिकमात्रमेव पाटी बुद्धिरेव बीजम्।

तथा गोलाध्याये मयोक्तम्।

अस्ति त्रैराशिकं पाटी बीजं च विमला मतिः।
किमज्ञातं सुबुद्धीनामतो मन्दार्थमुच्यते॥

गणकभणितिरम्यं बाललीलावगम्यं
सकलगणितसारं सोपपत्तिप्रकारम्।
इति बहुगुणयुक्तं सर्वदोषैर्विमुक्तं
पठ पठ मतिवृद्ध्यै लघ्विदं प्रौढिसिद्ध्यै॥

इति श्रीभास्कराचार्यविरचिते सिद्धान्तशिरोमणौ
बीजगणिताध्यायः समाप्तः।

---

वि०—इति कृपालुतनूजसुधाकरो यदिह भास्करबीजमपूर्वकम्।
तदुपपत्तिमितां च मम कृतिं विधिवरस्य चकार च कारणम्॥



## प्रक्षिप्तविषयाः ।

विशेष —अथ प्रसङ्गाद्ग्रहगणितोपयुक्तत्वादासन्नमानार्थं क्रिया प्रदर्श्यते,

$$\frac{१००}{६३} = १ + \frac{३७}{६३} = १ + \cfrac{१}{\frac{६३}{३७}} = १ + \cfrac{१}{१ + \frac{२६}{३७}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{\frac{३७}{२६}}} = १ + \cfrac{१}{१ + \cfrac{१}{१ + \frac{११}{२६}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{\frac{२६}{११}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \frac{४}{११}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{\frac{११}{४}}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{२ + \frac{३}{४}}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{२ + \cfrac{१}{\frac{४}{३}}}}}}$$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{२ + \cfrac{१}{१ + \frac{१}{३}}}}}}$$

अत्र प्रथमलब्धिग्रहणेन मानम् $= \frac{१}{१} = \frac{१}{१}$

प्रथमलब्धिद्वयग्रहणेन मानम् $= १ + \frac{१}{१} = \frac{२}{१}$

प्रथमलब्धित्रयग्रहणेन मानम् $= १ + \cfrac{१}{१ + \frac{१}{१}} = \frac{३}{२}$

प्रथमलब्धिचतुष्कग्रहणेन मानम् $= १ + \cfrac{१}{१ + \cfrac{१}{१ + \frac{१}{२}}} = \frac{८}{५}$

प्रथमलब्धिपञ्चकग्रहणेन मानम् $= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \frac{१}{२}}}} = \frac{१९}{१२}$

प्रथमलब्धिपदग्रहणेन मानम् $= \cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२+\cfrac{१}{२+\cfrac{१}{१}}}}}} = \frac{२७}{१७}$.

एवमत्र, $\frac{१}{१}, \frac{२}{१}, \frac{३}{२}, \frac{८}{५}, \frac{१९}{१२}, \frac{२७}{१७}$ एतानि

वास्तवभिन्नस्य $\frac{१००}{६३}$ अस्यासन्नमानानि कथ्यन्ते ।

अत्र $\frac{१}{१}$ इदं मानं वास्तवभिन्नमानादल्पम् ।

$\frac{२}{१}$ इदं चाधिकं द्वितीयखण्डस्याधिक्यात् ।

$\frac{३}{२}$ इदं चाल्पं तृतीयखण्डस्याल्पत्वात् ।

एवं पाश्चात्त्यभजनरीत्या स्फुटमवगम्यते यद्विषमासन्नमानानि वास्तवभिन्नादल्पानि समानि चाधिकानि सन्तीनि ।

एवं वर्णविन्यासेन

$$\frac{अ}{क} = ग + \cfrac{१}{घ+\cfrac{१}{च+\cfrac{१}{छ+\cfrac{१}{ज+\cfrac{१}{त+\cfrac{१}{द+\cfrac{१}{न+\dots}}}}}}}$$

पूर्ववल्लब्धिग्रहणेनासन्नमानानि

$\frac{ग}{१}, \frac{ग.घ+१}{घ}, \frac{च(ग.घ+१)+ग}{च.घ+१},$

$$\frac{छ\left\{च(ग.घ+१)+ग\right\}+(ग.घ+१)}{छ(च.घ+१)+घ}$$, इत्यादि ।

अत्र तृतीयमाने तृतीयलब्धिद्वितीयमानांशवधः प्रथममानांशयुक्तो ऽंशः । तृतीयलब्धिद्वितीयमानहरवधः प्रथममानहरयुक्तो हरः इति दृश्यते, एवं चतुर्थमानादिषु च रीतिर्दृश्यते तेनासन्नमानद्वयज्ञानाल्लब्धिभ्योऽन्यान्यासन्नमानानि सुखेन ज्ञायन्ते ।

अथ पूर्वागतप्रथमद्वितीययोरासन्नमानयोरन्तरेण यद्भिन्नमुत्पद्यते तत्रांशस्थाने रूपमिति दृश्यते । अथ कल्प्यन्ते त्रीण्यासन्नस्थितान्यासन्नमानानि

$\frac{अ_1}{क_1}, \frac{अ_2}{क_2}, \frac{अ_3}{क_3}$ । $\frac{अ_3}{क_3}$ एतत्सम्बन्धिनी लब्धिश्च ल, तदा

पूर्वप्रकारेण $\frac{अ_3}{क_3} = \frac{ल.अ_2+अ_1}{ल.क_2+क_1}$

अतः

$$\frac{अ_2}{क_2} \backsim \frac{अ_3}{क_3} = \frac{अ_2}{क_2} \backsim \frac{ल.अ_2+अ_1}{ल.क_2+क_1}$$

$$= \frac{ल.अ_2.क_2+अ_2.क_1 \backsim ल.अ_2.क_2+अ_1.क_2}{क_2(ल.क_2+क_1)}$$

$$= \frac{अ_2.क_1 \backsim अ_1.क_2}{क_2(ल.क_2+क_1)}$$, अत्रांशमानम्

$\frac{अ_1}{क_1}, \frac{अ_2}{क_2}$ अनयोरन्तरांशमानमगत इत्युपरिस्थयोरन्तरे यदंशमानं तद्वाग्रिमयोरन्तरे अथ यंशमानं परन्तु प्रथमद्वितीयासन्नमानयोरन्तरे त्वंशमानं रूपसमं पूर्वसिद्धं तेनागतस्थयोर्द्वयोरासन्नमानयोरन्तरे सर्वदाऽशमानं रूपं भवतीति सिध्यति ।

अथ पूर्वयुक्तितः $अ_2.क_1 \backsim अ_1.क_2 = १$

अतः पूर्वयुक्तित $अ_1$ $क_1$ एतौ वा $अ_2$ $क_2$ एतौ परस्परं दृढौ भवतोऽन्यथा तदपवर्तनाङ्केन रूपमप्यपवर्त्यं भवेत् तदयुक्तमित्यतः आसन्नमानेषु सर्वत्र हरांशौ दृढौ भवत इति सिध्यति ।

कल्प्यन्ते, $\frac{अ_1}{क}$, $\frac{अ_2}{क_1}$, $\frac{अ_3}{क_2}$ आसन्नस्थानि मानानि तदा पूर्ववत्,

$\frac{अ_3}{क_3} = \frac{ल\, अ_2 + अ_1}{ल\, क_2 + क_1}$ वास्तवाभिन्ने च ल, स्थाने ल+इ, इत्यस्योत्थापनेन

जातम् $= \frac{(ल+इ)\, अ_2 + अ_1}{(ल+इ)\, क_2 + क_1}$, इ = स्वल्पसंख्या ।

अत्र भिन्न $- \frac{अ_2}{क_2} = \frac{ल\, अ_2 + इ\, अ_2 + अ_1}{ल\, क_2 + इ\, क_2 + क_1} - \frac{अ_2}{क_2}$

$$= \frac{ल\, क_2\, अ_2 + इ\, क_2\, अ_2 + क_2\, अ_1 - ल\, क_2\, अ_2 - इ\, क_2\, अ_2 - क_1\, अ_2}{क_2\, (ल\, क_2 + इ\, क_2 + क_1)}$$

$$= \frac{क_2\, अ_1 - क_1\, अ_2}{क_2\, (ल\, क_2 + इ\, क_2 + क_1)} = \frac{1}{क_2 \left\{ क_2\, (ल+इ) + क_1 \right\}}$$

तथा

$$\frac{अ_3}{क_3} - भिन्न = \frac{ल\, अ_2 + अ_1}{ल\, क_2 + क_1} - \frac{ल\, अ_2 + अ_1 + अ_2\, इ}{ल\, क_2 + क_1 + क_2\, इ}$$

$$= \frac{ल^2\, क_2\, अ_2 + ल\, क_1\, अ_2 + ल\, क_2\, अ_2\, इ + ल\, क_2\, अ_1 + अ_1\, क_1 + अ_1\, क_2\, इ}{क_3\, (ल\, क_2 + क_1 + क_2\, इ)}$$

$$- \frac{ल^2\, क_2\, अ_2 + ल\, क_2\, अ_1 + ल\, क_2\, अ_2\, इ + ल\, अ_2\, क_1 + अ_1\, क_1 + क_1\, अ_2\, इ}{क_3\, (ल\, क_2 + क_1 + क_2\, इ)}$$

$$= \frac{इ\, (अ_1\, क_2 - क_1\, अ_2)}{क_3\, (ल\, क_2 + क_1 + क_2\, इ)} = \frac{इ}{क_3\, (ल\, क_2 + क_1 + क_2\, इ)}$$

प्रथमान्तरस्याऽऽसन्नमानादस्यान्तरस्याऽऽसन्नमानमल्पं तदीयहरमानादस्य हरमानं चाधिकमत उत्तरोत्तरमासन्नमानानि सूक्ष्माणि वास्तवभिन्नस्य निकटस्थत्वादिति सिध्यति ।
अथैषां सिद्धान्तानां सूत्राणि ।

आसन्नमानस्य हरांशमाने अभ्र मिगुण्ये गदिते क्रमेण ।
पूर्वस्थितासन्नहरांशकाभ्यां तदा हरांशौ भवतोऽग्रिमस्य ॥ १ ॥
आसन्नमानयोरासन्नस्थयोरन्तरं भवेत् ।
अंशस्थाने सदा रूपं नित्यमेतच्च धीमता ॥ २ ॥
सर्वत्वासन्नमानेषु हरांशौ भवतो दृढौ ।
तथोत्तरोत्तरं सूक्ष्माण्यासन्नानि भवन्ति हि ॥ ३ ॥

कल्प्यते $\frac{अ_1}{क_1}$ इदमासन्नमानं वास्तवाभिन्नात् [illegible] $\frac{स}{ह}$ अस्य भिन्नस्य हर-

मानें र, $क_1$ अस्मादल्पम् तदा $\frac{स}{र}$ अस्मात् इदमेव निकटतरं वास्तवभिन्नस्य, यद्येवं न तर्हि $\frac{अ_1}{क_1}$, $\frac{अ_2}{क_2}$ अनयोरन्तरात् $\frac{स}{र}$, $\frac{अ_2}{क_2}$, अनयोरन्तरमल्पतरम्।

$$यत \quad \frac{अ_1}{क_1} < \frac{स}{र} < वाभि. < \frac{अ_2}{क_2} \left(\frac{अ_2}{क_2} = अग्रिमासन्नम्\right)$$

$$अतः \quad \frac{अ_1}{क_1} \sim \frac{अ_2}{क_2} = \frac{1}{क_1.क_2} < \frac{अ_2}{क_2} - \frac{स}{र}$$

$$वा, \frac{1}{क_1.क_2} > \frac{अ_2.र - क_2.स}{क_2.र} \quad वा, \frac{1}{क_1} > \frac{अ_2.र - क_2.स}{र}$$

अथ $क_1 > र$ अतः $1 > अ_2.र - क_2.स$ इदमसम्भवं यतः $अ_2.र$, $क_2.स$ अनयोरभिन्नसंख्ययोरन्तरं रूपाल्पमवाप्यते—

कल्प्यते $\frac{अ_1}{क_1}$, $\frac{अ_2}{क_2}$ आसन्नद्वयमासन्नमानद्वयं

तदा $\frac{अ_1.अ_2}{क_1.क_2}$ इदं वास्तवभिन्नवर्गादधिकम्

यदि $\frac{अ_1}{क_1} > \frac{अ_2}{क_2}$, अन्यथाऽल्पमिति

यतो यदि भाज्यलब्धि $= ल$

$$तदा \; वास्तवभिन्नम् = \frac{ल.अ_2 + अ_1}{ल.क_2 + क_1}$$

$$अत्र \quad \frac{अ_1}{वाभि\, क_1} - \frac{वाभि\, क_2}{अ_2} = \frac{क_2}{वाभि.\, अ_2}\left(\frac{अ_1.अ_2}{क_1.क_2} - वाभि\right)$$

$$= \frac{अ_1(ल\, क_2 + क_1)}{क_1(ल\, अ_2 + अ_1)} - \frac{क_2(ल\, अ_2 + अ_1)}{अ_2(ल\, क_2 + क_1)}$$

अत्र समच्छेदतोऽन्तरेंऽशमानम्

$$= अ_1.अ_2(ल.क_2 + क_1)^2 - क_1.क_2(ल.अ_2 + अ_1)^2$$
$$= अ_1 अ_2.ल^2.क_2^2 + 2अ_1.अ_2 ल.क_2\, क_1 + अ_1 अ_2.क_1^2$$
$$- क_1.क_2\, ल^2.अ_2^2 - 2अ_1.अ_2\, ल.क_2.क_1 - क_1.क_2\, अ_1^2$$
$$= ल^2 अ_2 क_2(अ_1 क_2 - अ_2 क_1) - अ_1 क_1(अ_1.क_2 - अ_2.क_1)$$

$$=(\text{ल}^{२}.\text{अ}_{२}.\text{क}_{२}-\text{अ}_{१}\,\text{क}_{१})(\text{अ}_{१}.\text{क}_{२}-\text{अ}_{२}\,\text{क}_{१})$$

अत्र $(\text{ल}^{२}.\text{अ}_{२}.\text{क}_{२}-\text{अ}_{१}.\text{क}_{१})$ इद सर्वदा धनमेव

$$\text{अ}_{१}.\text{क}_{२}-\text{अ}_{२}.\text{क}_{१}=\text{क}_{१}.\text{क}_{२}\left(\frac{\text{अ}_{१}}{\text{क}_{१}}-\frac{\text{अ}_{२}}{\text{क}_{२}}\right)$$ इदं तु

यदा $\frac{\text{अ}_{१}}{\text{क}_{१}}>\frac{\text{अ}_{२}}{\text{क}_{२}}$ तदा धनमतस्तदा

$\frac{\text{क}_{२}}{\text{वाभि}.\text{अ}_{२}}\left(\frac{\text{अ}_{१}.\text{अ}_{२}}{\text{क}_{१}.\text{क}_{२}}-\text{वाभि}^{२}\right)$ इदं वा

$\frac{\text{अ}_{१}\text{अ}_{२}}{\text{क}_{१}\text{क}_{२}}-\text{वाभि}^{२}$ इद धन भवति

तत $\frac{\text{अ}_{१}\text{अ}_{२}}{\text{क}_{१}\text{क}_{२}}>\text{वाभि}^{२}$ इदमुपपन्नं भवति

अत सूत्रावतार ।

आसन्नमानहरतो यावद्भिन्नस्य हरो भवेत् ।
अल्प आसन्नमानात् स्यात्स स सूक्ष्मतरस्तत ॥ १
द्वयोरासन्नयोरासन्नस्थयोराहतिर्भवेत् ।
कृतेर्वास्तवभिन्नस्याधिका पूर्वेऽधिकेऽभिमात् ॥ २ ॥

अथ यथाऽऽसन्नमानोक्तविधिनाऽवर्गस्य मूलमानीयते तदाऽऽयोलिग्निनक्रियोत्पद्यते—

यथा

$$\sqrt{११}=\frac{\sqrt{११}+०}{१}=३+\frac{\sqrt{११}-३}{१}$$

$$=३+\frac{(\sqrt{११}-३)(\sqrt{११}+३)}{\sqrt{११}+३}=३+\frac{२}{\sqrt{११}+३}$$

$$=३+\frac{१}{\frac{\sqrt{११}+३}{२}}=३+\frac{१}{३+\frac{\sqrt{११}+३-६}{२}}$$

$$=३+\frac{१}{३+\frac{\sqrt{११}-३}{२}}=३+\frac{१}{३+\frac{२}{२(\sqrt{११}+३)}}$$

$$=३+\cfrac{१}{३+\cfrac{१}{\sqrt{११}+३}}=३+\cfrac{१}{३+\cfrac{१}{\cfrac{\sqrt{११}+३}{१}}}$$

$$=३+\cfrac{१}{३+\cfrac{१}{\cfrac{६+\sqrt{११}-३}{१}}}=३+\cfrac{१}{३+\cfrac{१}{६+\cfrac{२}{\sqrt{११}+३}}}$$

इत्यादि। एवमत्र ३, ३, ६, इत्यादि-लब्धिग्रहणेनैकादशमूलस्यासन्नमानानि आ-सन्नमानानयोक्त्याऽऽगच्छेयुः।

एवमक्षरविन्यासेन

$$\frac{\sqrt{\text{न}+०}}{१}=\text{अ}+\frac{\sqrt{\text{न}}-\text{अ}}{१}=\text{अ}+\frac{\text{शे}}{\sqrt{\text{न}}+\text{अ}}\ ।$$

यदि $\text{शे}=\text{न}-\text{अ}^{२}$ तथा न इत्यस्य निरग्रमूलम् $=\text{अ}$।

$$\frac{\sqrt{\text{न}}+\text{अ}}{\text{शे}}=\text{क}+\frac{\sqrt{\text{न}}+\text{अ}-\text{शे}.\text{क}}{\text{शे}}=\text{क}+\frac{\text{शे}'}{\sqrt{\text{न}}+\text{अ}'}$$

यदि $\text{अ}'=\text{शे}.\text{क}-\text{अ}$, तथा $\text{शे}'=\frac{\text{न}-\text{अ}'^{२}}{\text{शे}}$

अत्र न इत्यस्य निरग्रमूलम् अ-संज्ञया युक्तं शे-संज्ञया भक्तं यन्निरग्रं लब्धं भवेत् तत् कसंज्ञं बोध्यम्।

एवं तथैव

$$\frac{\sqrt{\text{न}}+\text{अ}'}{\text{शे}'}=\text{क}'+\frac{\sqrt{\text{न}}+\text{अ}'-\text{शे}'.\text{क}'}{\text{शे}'}=\text{क}'+\frac{\text{शे}''}{\sqrt{\text{न}}+\text{अ}''}$$

यदि $\text{अ}''=\text{शे}'.\text{क}'-\text{अ}'$, तथा $\text{शे}''=\frac{\text{न}-\text{अ}''^{२}}{\text{शे}'}$

अत्र न इत्यस्य यन्निरग्रमूलं तत् अ'-संज्ञकेन युक्तं शे'-संज्ञया भक्तं यन्निरग्रं लब्धं तत् क'संज्ञं ह्येवमेवमग्रेऽपि बोध्यमित्येवं यद्यप्यत्र स्फुटं दृश्यते शे, शे', शे'', इत्यादीनां तथा, अ, अ', अ'' इत्यादीनां च धनत्वं तथाऽपि स्पष्टार्थं संक्षेपतः प्रदर्श्यते।

कल्प्यन्ते कस्याप्यासन्नमूले क्रमेण त्रयाणां राशिसमूहानां मानानि।

$०, अ, अं, अं', अं'', \ldots \ldots \ldots$ (१)

$१, शे, शे', शे'', शे''', \ldots \ldots \ldots$ (२)

$अ, क, कं, कं', कं'', \ldots \ldots \ldots$ (३)

कल्प्यन्ते-(१) ऽस्मिन् क्रमेण राशित्रयमानम् पृथक् $अ_१, अं_१, अं'_१,$ तत्सम्बन्धिराशित्रय (२) $शे'_१, शे'_१, शे''_१$। (३) $क_१, कं_१, कं'_१,$ च राशित्रयम्

अत्र $क_१, कं_१, कं'_१,$—त्रयवशादासन्नमूलस्यासन्नमानानि $\frac{प}{ल}, \frac{पं}{लं}, \frac{पं'}{लं'},$ चेति।

तदासन्नमानानयनविधिना

$\frac{पं'}{लं'} = \frac{कं'_१ . पं + प}{कं'_१ . लं + ल}$। अथ $कं'_१$,—स्थाने यदि सावयवा वास्तवा लब्धि $\frac{\sqrt{न} + अं'_१}{शे'}$ इय गृह्यते तदा

$$\sqrt{न} = \frac{\frac{\sqrt{न} + अं'_१}{शे'} . पं + प}{\frac{\sqrt{न} + अं'_१}{शे''} . लं + ल} = \frac{पं (\sqrt{न} + अं'_१) + शे'' प}{लं (\sqrt{न} + अं'_१) + शे'' ल}$$

पक्षौ समच्छेदीकृत्यासम्भवसम्भवयो पृथक् पृथक् समीकरण कृत्वा जात समीकरणद्वयम् $अं'_१ \; पं + शे'' \; प = न \; लं, \; अं . लं + शे'' \; ल = पं$

तत

$$अं'_१ (प लं - पं ल) = प पं - ल . लं \; न = ल लं \left( \frac{प पं}{ल लं} - न \right)$$

$$शे''_१ \; (प लं - पं ल) = लं^२ . न - पं^२ = लं^२ \; \left( न - \frac{पं^२}{लं^२} \right)$$

$$वा, \; ल . लं . अं'_१ \left( \frac{प}{ल} - \frac{पं}{लं} \right) = ल . लं \left( \frac{प . पं}{ल लं} - न \right)$$

$$अत \; अं'_१ \; \left( \frac{प}{ल} - \frac{पं}{लं} \right) = \frac{प पं}{ल लं} - न$$

अत्र यदि $\frac{प}{ल} > \frac{पं}{लं}$ तदा $\frac{प प}{ल . लं} > न$

यदि च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा $\frac{\text{प}.\text{प}'}{\text{ल}.\text{ल}'} < \text{न}$

आसन्नमानान्तिमसूत्रात् $\text{शे}''_{3}$ इत्यस्य मानं सर्वदा धनम्।

एवम्

$$\text{ल}.\text{ल}'\,\text{शे}''\left(\frac{\text{प}}{\text{ल}}-\frac{\text{प}'}{\text{ल}'}\right)=\text{ल}^{2}\left(\text{न}-\frac{\text{प}'^{2}}{\text{ल}'^{2}}\right)$$

$$\text{अत}\quad \text{ल}\,\text{शे}''_{3}\left(\frac{\text{प}}{\text{ल}}-\frac{\text{प}'}{\text{ल}'}\right)=\text{ल}'\left(\text{न}-\frac{\text{प}'^{2}}{\text{ल}'^{2}}\right)$$

अत्र ल, ल', सर्वदा धन तथा यदा $\frac{\text{प}}{\text{ल}} > \frac{\text{प}'}{\text{ल}'}$ तदा न $> \frac{\text{प}'^{2}}{\text{ल}'^{2}}$ ।

यदा च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा न $< \frac{\text{प}'^{2}}{\text{ल}'^{2}}$ अत $\text{शे}''_{3}$ इत्यस्य मानं सर्वदा धनं सिध्यति।

अथ (१) अस्मिन् ०, अ एतद् द्वय धनं तथा (२) अस्मिन् १, शे, इति च धनमस्तीति स्फुटं दृश्यते, तेन किमपि राशित्रयं गृहीत्वा पूर्वोक्तरीत्या यदि साध्यते तदा तृतीयो धनात्मक सिध्यति।

अत (१), (२) अनयोः सर्वे राशयो धनात्मकाः सन्ति।

पूर्वप्रतिपादितसमीकरणेऽस्मिन् $\text{शे}'_{3}\,(\text{प}.\text{ल}'-\text{प}'\,\text{ल})=\text{ल}'^{2}\,\text{न}-\text{प}'^{2}$

आसन्नमानानयनयुक्त्या $\text{प}.\text{ल}'-\text{प}'.\text{ल}=\pm 1$ तेन $\pm\text{शे}''_{3}=\text{ल}'^{2}\,\text{न}-\text{प}'^{2}$ पक्षान्तरानयनेन $\text{प}'^{2}=\text{ल}'^{2}\,\text{न}\mp\text{शे}''_{3}$

अतो यस्या आसन्नमूलस्यापेक्षित सा मान्या चेत् प्रकृति कल्प्यते तदा तदासन्नमानस्य हर कनिष्ठ लब्धिश्च ज्येष्ठ भवति तदग्रिमशेषसमे क्षेपे इति सिध्यति, अर्थात् आसन्नमानस्य समत्वे तदग्रिमशेषसमधनक्षेपे विषमत्वे तु तदग्रिमशेषसमर्णक्षेपे हरांश माने कनिष्ठज्येष्ठे क्रमेण भवत इति। अतो यदा तच्छेषमानं रूपसमं स्यात् तदा तदासन्नमाने तत्र हरांशमाने रूपक्षेपे वा रूपशुद्धौ ह्रस्वज्येष्ठे अभिन्ने भवतोऽतो मदुक्तानि सूत्राणि।

निरम पद यद्गुणात् स्यात् फलान्य धनाद्य तदेवात्र शेष तदग्रम्।
यदाप्तं घन शेषहृद्यमन्यत् फलं तद्धृत शेषमूनं धनेन ॥ १ ॥
घनाप्यं नव तस्य कृत्वा विदितो गुण शेषमथोऽन्यतरस्य मानम्।
गुणघ्नेवमन्ते यदा शेषमानं भवेद्रूपतुल्यं तदा लब्धिनो ये ॥ २ ॥

यदि च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा $\frac{\text{प.प}'}{\text{ल.ल}'} < \text{न}$

आसन्नमानान्तिमसूत्रात् $\text{अं}''_1$ इत्यस्य मानं सर्वदा धनम् ।

एवम्

$$\text{ल.ल}'\,\text{शे}''_1\left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \text{ल}'^2\left(\text{न} - \frac{\text{प}'^2}{\text{ल}'^2}\right)$$

$$\text{अतः ल.शे}''_1\left(\frac{\text{प}}{\text{ल}} - \frac{\text{प}'}{\text{ल}'}\right) = \text{ल}'\left(\text{न} - \frac{\text{प}'^2}{\text{ल}'^2}\right)$$

अत्र ल, ल', सर्वदा धन तथा यदा $\frac{\text{प}}{\text{ल}} > \frac{\text{प}'}{\text{ल}'}$ तदा न $> \frac{\text{प}'^2}{\text{ल}'^2}$ ।

यदा च $\frac{\text{प}}{\text{ल}} < \frac{\text{प}'}{\text{ल}'}$ तदा न $< \frac{\text{प}'^2}{\text{ल}'^2}$ अतः $\text{शे}''_1$ इत्यस्य मानं सर्वदा धनं सिध्यति ।

अथ (१) अस्मिन् ०, अ एतद् द्वय धनं तथा (२) अस्मिन् १, शे, इति च धनमस्तीति स्फुटं दृश्यते, तेन किमपि राशित्रय गृहीत्वा पूर्वोक्तरीत्या यदि ज्ञायते तदा तृतीयो धनात्मकः सिध्यति ।

अतः (१), (२) अनयोः सर्वे राशयो धनात्मकाः सन्ति ।

पूर्वप्रतिपादितसमीकरणेऽस्मिन् $\text{शे}''_1\,(\text{प.ल}' - \text{प}'\text{.ल}) = \text{ल}'^2\,\text{न} - \text{प}'^2$

आसन्नमानानयनयुक्त्या $\text{प.ल}' - \text{प}'\text{.ल} = \pm 1$ तेन $\pm\text{शे}''_1 = \text{ल}'^2\,\text{न} - \text{प}'^2$ पक्षान्तरानयनेन $\text{प}'^2 = \text{ल}'^2\,\text{न} \mp \text{शे}''_1$

अतो यस्या आसन्नमूलमपेक्षितं सा मान्या चेत् प्रकृतिः कल्प्यते तदा तदासन्नमानस्य हरः कनिष्ठं लब्धिश्च ज्येष्ठं भवति तदग्रिमशेषसमे क्षेपे इति सिध्यति, अर्थादासन्नमानस्य समत्वे तदग्रिमशेषसमधनक्षेपे विषमत्वे तु तदग्रिमशेषसमर्णक्षेपे हरांशमाने कनिष्ठज्येष्ठे क्रमेण भवत इति । अतो यदा तच्छेषमानं रूपसमं स्यात् तदा यदासन्नमानं तत्र हरांशमाने रूपक्षेपे वा रूपशुद्धौ ह्रस्वज्येष्ठे अभिन्ने भवतोऽतो मदुक्तानि सूत्राणि ।

निरग्रं पदं यद्गुणात् स्यात् फलाख्यं धनाख्यं तदेवात्र शेषं तदग्रम् ।
पदाढ्यं धनं शेषहृत्प्राग्वदन्यत् फलं तद्धतं शेषमूनं धनेन तौ ॥ १ ॥
धनाख्यं नयं तस्य कृत्वा विहीनो गुणः शेषभक्तोऽन्यशेषस्य मानम् ।
मुहुस्त्वेवमन्ते यदा शेषमानं भवेद्रूपतुल्यं तदा लब्धितो ये ॥ २ ॥

योगेन समत्वकाः

$\text{वि}_1.\text{प्र}+\text{प्र}_1(\text{वि}-\text{वि}_1)=\text{वि}_1.\text{द्वि}+\text{द्वि}(\text{वि}-\text{वि}_1)$

$=\text{वि}_1.\text{तृ}+\text{तृ}_1(\text{वि}-\text{वि}_1)=\text{वि}_1.\text{च}+\text{च}_1(\text{वि}-\text{वि}_1)$

समशोधनेन

$\text{वि}_1(\text{द्वि}-\text{प्र})=(\text{वि}-\text{वि}_1)(\text{प्र}_1-\text{द्वि}_1)$

$\text{वि}_1(\text{तृ}-\text{द्वि})=(\text{वि}-\text{वि}_1)(\text{द्वि}_1-\text{तृ}_1)$

$\text{वि}_1(\text{च}-\text{तृ})=(\text{वि}-\text{वि}_1)(\text{तृ}_1-\text{च}_1)$

यदि $\text{द्वि}-\text{प्र}=\text{स}.\text{प}_1$ । $\text{तृ}-\text{द्वि}=\text{स}.\text{प}_2$ । $\text{च}-\text{तृ}=\text{स}.\text{प}_3$

यत्र $\text{द्वि}-\text{प्र}$, $\text{तृ}-\text{द्वि}$, $\text{च}-\text{तृ}$ एषां समापवर्तनं $=\text{स}$ ।

तदा $\text{वि}_1.\text{स}.\text{प}_1=(\text{वि}-\text{वि}_1)(\text{प्र}_1-\text{द्वि}_1)$

$\text{वि}_1.\text{स}.\text{प}_2=(\text{वि}-\text{वि}_1)(\text{द्वि}_1-\text{तृ}_1)$

$\text{वि}_1.\text{स}.\text{प}_3=(\text{वि}-\text{वि}_1)(\text{तृ}_1-\text{च}_1)$

अत्र यदि $\text{इ}.\text{वि}_1.\text{स}=(\text{वि}-\text{वि}_1)$

तदा

$\frac{\text{प}_1}{\text{इ}}=\text{प्र}_1-\text{द्वि}_1 \therefore \text{द्वि}_1=\text{प्र}_1-\frac{\text{प}_1}{\text{इ}}$

$\frac{\text{प}}{\text{इ}_2}=\text{द्वि}_1-\text{तृ}_1 \therefore \text{तृ}_1=\text{द्वि}_1-\frac{\text{प}_2}{\text{इ}}$

$\frac{\text{प}_3}{\text{इ}}=\text{तृ}_1-\text{च}_1 \therefore \text{च}_1=\text{तृ}_1-\frac{\text{प}_3}{\text{इ}}$

योगेन

$\frac{\text{प}_1+\text{प}_2+\text{प}_3}{\text{इ}}=\text{प्र}_1-\text{च}_1$ परन्तु $\text{च}_1$-मान धन

तेन $\text{प्र}_1>\frac{\text{प}_1+\text{प}_2+\text{प}_3}{\text{इ}}$

तथा $\text{प्र}>\text{प्र}_1$ यतः $\text{प्र}_1$ प्रथमखण्ड प्रथमधनम्यातोऽत्र $\text{प्र}_1$ मानमिष्टं प्रकल्प्य तस्मात् $\frac{\text{प}_1}{\text{इ}}$ विशोध्य $\text{द्वि}_1$-मान साध्य ततोऽन्यानि खण्डानि पूर्वयुक्त्या साध्यानि परन्तु यथा सर्वखण्डान्यभिन्नानि धनानि स्युस्तदर्थम् इ$=$१, इति कल्प्य तथा कृते जातानि खण्डानि

$\text{द्वि}_1=\text{प्र}_1-\text{प}_1$ । $\text{तृ}_1=\text{द्वि}_1-\text{प}_2$ । $\text{च}_1=\text{तृ}_1-\text{प}_3$ । अथ पूर्वसमीकरणेन $\text{इ}.\text{वि}_1.\text{स}=\text{वि}-\text{वि}_1$, अनेन $\text{वि}_1(\text{इ}.\text{स}+1)=\text{वि}$, यदि इ$=$१

तदा वि$_1$ ( स + १ ) = वि । अतोऽन्यसमार्घमिष्टं प्रकल्प्य सैकेन समापवर्त्तनेन गुणमाद्यमसमार्घमानं भवेदिति । यथाऽत्रोदाहृतौ

प्र = २०, द्वि = ४०, तृ = ६०, च = ८०

द्वि − प्र = २०, तृ − द्वि = २०, च − तृ = २०

समापवर्त्तनम् = २०, ततः प$_1$ = १, प$_2$ = १, प$_3$ = १

अथ प्र$_1$ − मानम् = १५ इति कल्पितम्

ततः प्र$_1$ = १५,
द्वि$_1$ = १५ − १ = १४
तृ$_1$ = १४ − १ = १३
च$_1$ = १३ − १ = १२

अन्यसमार्घमानं रूपं कल्पितं तदाऽऽद्यसमार्घमानं = वि१ = (स + १) = २१

| | | | | |
|---|---|---|---|---|
| पूर्वधनानि = | २० | ४० | ६० | ८० |
| आद्यखण्डानि = | १५ | १४ | १३ | १२ |
| अन्यखण्डानि = | ५ | २६ | ४७ | ६८ |
| आद्यखण्डधनानि = | ३१५ | २९४ | २७३ | २५२ |
| आद्यखण्डधनानि = | ५ | २६ | ४७ | ६८ |
| समधनानि = | ३२० | ३२० | ३२० | ३२० |

अथान्यः प्रश्नः ।

षड्घ्नदिक्शतानि यद्धनानि ते समार्घतः
फलानि च प्रगृह्य विक्रयं प्रकृत्य शेषकम् ।
वसून् वसून् पणेन विक्रयं प्रकृत्य चाभवन्
समस्वकास्तदा वदाशु विक्रयं क्रयं च मे ॥

कल्प्यते — धनानि प्र, द्वि, तृ, च, क्रयमान = क, विक्रयमानं = वि, शेषविक्रयमान = शे ।

तदा प्रश्नोक्त्या फलानि = प्र.क, द्वि.क, तृ.क, च.क ।

विक्रयेण हृते क्रमेण लब्धानि का, नी, पी, लो ।

ततः शेषाणि = प्र.क − वि.का । द्वि.क − वि.नी । तृ.क − वि.पी । च.क − वि.लो ।

धनानि = $\dfrac{\text{प्र.क − का ( वि − शे )}}{\text{शे}}$ = $\dfrac{\text{द्वि.क − नी ( वि − शे )}}{\text{शे}}$

= $\dfrac{\text{तृ.क − पी ( वि − शे )}}{\text{शे}}$ = $\dfrac{\text{च.क − लो ( वि − शे )}}{\text{शे}}$ वा,

प्र.स.क − का ( वि − शे ) = द्वि.स.क − नी ( वि − शे )

$= \text{तृ}.\text{स}.\text{क} - \text{पी}\,(\text{वि} - \text{शे}) = \text{च}.\text{स}.\text{क} - \text{लो}\,(\text{वि} - \text{शे})$ ।

यत्र धनानां समापवर्त्तन $= \text{स}$, तथा $\text{प्र} = \text{प्रं}.\text{स}$, $\text{द्वि} = \text{द्वि}'.\text{स}$, इत्यादि। अथ यदि $\text{स}$, $\text{शे}$ अनयोः समापवर्त्तन $= \text{स}_1$, तथा $\text{स}_1.\text{सं} = \text{स}$; $\text{अ}.\text{स}_1 = \text{शे}$ तदा

$$\text{प्रं}.\text{सं}.\text{क} - \text{गा}\left(\frac{\text{वि}}{\text{स}_1} - \text{अ}\right) = \text{द्वि}'.\text{सं}.\text{क} - \text{नी}\left(\frac{\text{वि}}{\text{स}_1} - \text{अ}\right)$$

$$= \text{तृं}.\text{सं}.\text{क} - \text{पी}\left(\frac{\text{वि}}{\text{स}_1} - \text{अ}\right) = \text{चं}.\text{सं}.\text{क} - \text{लो}\left(\frac{\text{वि}}{\text{स}_1} - \text{अ}\right)$$

$=$ अपवर्त्तितसमधनानि

अत्र यदि $\text{क} = \dfrac{\text{वि}}{\text{स}_1} - \text{अ}$ तदा, प्रथमफलानि $= \dfrac{\text{वि}.\text{प्र}}{\text{स}_1} - \text{अ}.\text{प्र}$

$$1 + \text{गा} = \frac{\frac{\text{वि}.\text{प्र}}{\text{स}_1}}{\text{वि}} = \frac{\frac{\text{वि}.\text{सं}.\text{प्रं}}{\text{स}_1}}{\text{वि}} = \frac{\text{वि}.\text{सं}.\text{प्रं}}{\text{वि}} = \text{सं}.\text{प्रं}$$

यदि $\text{वि} > \text{अ}.\text{प्र}$, एवमेव

$1 + \text{नी} = \text{सं}.\text{द्वि}'$ यदि $\text{वि} > \text{अ}.\text{द्वि}$

$1 + \text{पी} = \text{सं}.\text{तृं}$ यदि $\text{वि} > \text{अ}.\text{तृ}$

$1 + \text{लो} = \text{सं}.\text{चं}$ यदि $\text{वि} > \text{अ}.\text{च}$

तत उत्थापनेनापवर्त्तितसमधनानि सर्वत्र समानान्येव

यथा $\text{प्रं}.\text{सं}.\text{क} - \text{गा}\left(\dfrac{\text{वि}}{\text{स}_1} - \text{अ}\right)$

$$= \text{प्रं}.\text{सं}\left(\frac{\text{वि}}{\text{स}_1} - \text{अ}\right) - (\text{सं}.\text{प्रं} - 1)\left(\frac{\text{वि}}{\text{स}_1} - \text{अ}\right) =$$

$$\left(\frac{\text{वि}}{\text{स}_1} - \text{अ}\right)(\text{प्रं}.\text{सं} - \text{सं}.\text{प्रं} + 1) = \frac{\text{वि}}{\text{स}_1} - \text{अ}$$

अत्र शेषविक्रयेण यथा सर्वेषां शेषधनान्यभिन्नानि, स्युस्तदर्थं क्रयविक्रययोर्मानं तथा कल्प्यं यथा शेषविक्रयभक्ते अभिन्ने फले स्तास्तदा विक्रयस्वरूपम् $\dfrac{\text{वि}}{\text{शे}} =$ अभिन्नम्।

$\text{वि} > \text{अ}.\text{प्र}$, $\text{अ}.\text{द्वि}$, $\text{अ}.\text{तृ}$, $\text{अ}.\text{च}$, तत क्रयमानम् $= \dfrac{\text{वि}}{\text{स}_1} - \text{अ} = \dfrac{\text{अ}.\text{वि}}{\text{शे}} - \text{अ}$

$= \text{अ}\left(\dfrac{\text{वि}}{\text{शे}} - 1\right)$

यथा प्रकृतोदाहरणे चतुर्णां धनानि = ६ । ८ । १० । १००

धनाना समापवर्त्तनम् = २, शेपविक्रयमानम् = ८ = शे

२, ८ अनयोरपवर्त्तनं च $\text{स}_1$ = २ ततः अ = ४

अत्र कल्पितविक्रयमानम् = ४०८ > अ.च = ४००

तथा $\frac{४०८}{८} = \frac{\text{वि}}{\text{शे}} = ५१$ = अभिन्नम्

तदा क्रयमानम् = $\text{अ}\left(\frac{\text{वि}}{\text{शे}} - १\right) = ४\,(५१ - १) = २००$

ततः फलानि = १२०० । १६०० । २००० । २००००

विक्रयेण ४०८ अनेन हृते शेषाणि = ३८४ । ३७६ । ३६८ । ८

शेषविक्रयेण ८ अनेन हृते शेषधनानि = ४८ । ४७ । ४६ । १

प्रथमविक्रयधनानि = २ । ३ । ४ । ४९ समधनानि = ५० ।



अथ

# नवीनप्रक्षिप्तविपयाः ।

## घातेङ्गितम् ।

यथैकघातः कस्यापि तत्समान एव, द्विघातो वर्गस्त्रिघातो घन एव वर्गवर्ग इत्यादि-यथेष्टघाता भवितुमर्हन्ति । पाश्चात्यगणिते यस्य घातोऽपेक्ष्यते तन्मस्तकोपरि तद्घात-ज्ञापनाय तदङ्का रक्ष्यन्त इति यथा $\text{अ}^1 = \text{अ}$ । $\text{अ}^2 = \text{अ}^1 \times \text{अ}^1$ । $\text{अ}^3 = \text{अ}^2 \times \text{अ}^1 = \text{अ}^1 \times \text{अ}^1 \times \text{अ}^1$, एवं यथेष्टम् $\text{अ}^{\text{न}} = \text{अ}^1 \times \text{अ}^1 \times \text{अ}^1 \times \text{अ}^1 \times \cdots\cdots$ ।

इहोर्ध्वरूपदर्शनादवगम्यते तद्घातज्ञापका एकद्व्यादयः । एकघाते स एव । यदि द्विघाते विचारः क्रियते तदा $\text{अ}^1 \times \text{अ}^1$ अत्र एकघात एकघातेन गुण्यतेऽनेनैकयोर्योगो द्वयम् $\text{अ}^1 \times \text{अ}^1 = \text{अ}^2$, एवम् यथेष्टघातेषु तदिष्टज्ञापनाय न, म, इत्यादि । यथा इष्टघातः पञ्च तत्र न = ५ ।

### आङ्गले घात, = Powers—

अथ कल्प्यते कश्चिद्राशिः पञ्चदशघातः । यथा $\text{क}^{१५} = \text{क}^{५+१०} = \text{क}^{\text{न}+\text{म}}$ यदीह न = ५ । म = १० ।

$\text{क}^{१५} = \text{क}^{३\times५} = \text{क}^{\text{न}+\text{न}+\text{न}} = \text{क}^{३\text{न}}$ एवं घातप्रपञ्चोऽवगम्यः ।

क$^{३\times५}$ = क$^{च\times न}$ यदीह च = ३। अत्र च, न इति पञ्चदशानामवयवौ। एवं षष्टिः = ४×३×५ अस्याः फ, च, न इत्यवयवाः। यदीह फ = ४। आङ्ग्ले गुणकावयवाः फैक्टर्स ( Factors ) इति कथ्यते। आङ्गलेऽव्यक्तगणिते गुणकावयवानामतीवोपयोगः। भास्करीयाव्यक्तगणितविदस्तदवयवज्ञानविधुराः पाश्चात्याव्यक्तगणितप्रश्नोत्तरे प्रायः क्लिश्यन्त्यतस्तदवयवप्रपञ्चोऽत्र प्रदर्श्यते।

यथा अ$^{२}$ − क$^{२}$ = ( अ + क ) ( अ − क ) एताववयवौ। एवम्

( अ$^{३}$ + क$^{३}$ ) = ( अ + क ) ( अ$^{२}$ − अ. क + क$^{२}$ ),

अ$^{३}$ − क$^{३}$ = ( अ − क ) ( अ$^{२}$ + अ.क + क$^{२}$ ),

अ$^{३}$ + क$^{३}$ + ग$^{३}$ − ३ अ. क. ग = ( अ + क + ग ) ( अ$^{२}$ + क$^{२}$ + ग$^{२}$ − अ. क − अ.ग − क.ग।

एवमवयवद्वयघटितेषु समानावयवपृथक्करणं सुलभम्।

(१) उदा.—२४ य.$^{४}$ अ$^{३}$ − ४० य.$^{३}$ अ$^{४}$ + ५६ य.$^{२}$ अ$^{५}$

= ८य.$^{२}$ अ$^{३}$ ( ३य$^{२}$ − ५ य.अ + ७अ$^{२}$ )।

अथ य$^{२}$ + य.प + फ अत्रावयवपृथक्करणे विचारः। यदि प = क + ग,

फ = क.ग तदा य$^{२}$ + य. प + फ = य$^{२}$ + य ( क + ग ) + क.ग

= य$^{२}$ + य. क + य. ग + क.ग = य (य + क) + ग(य + क) = ( य + क ) ( य + ग )।

अत्रेदमवगन्तव्यं यत् प, फ अनयोर्व्यक्ताङ्ककल्पनं तदेव युक्तं ययोर्योगः = प तयोर्घातः = फ तदा प = १७, फ = ३०। ततः य$^{२}$ + प.प + प = य$^{२}$ + १७ य + ३०

= य$^{२}$ + १५ य + २य + ३० = य ( य + १५ ) + २ ( य + १५ )

= ( प + १५ ) ( य + २ )।

( २ ) उदा.—म$^{२}$ − १२म.न + २०न$^{२}$ अत्रापि पूर्वरीत्या व्यक्ताङ्कौ −२, −१० अनयोर्योगः = −१२ घातश्च = २० तदा उत्त. = ( ग − १० न ) ( म − २ न )

( ३ ) उदा.—अ$^{४}$ − अ$^{२}$ − १२ अत्र यदि अ$^{२}$ = य तदा अ$^{४}$ − अ$^{२}$ − १२

= य$^{२}$ − य१२ अत्राप्युक्तरीत्या द्वौ व्यक्ताङ्कौ −४, ३ अत उत्त—

= ( य − ४ ) ( य + ३ ) = ( अ$^{२}$ − ४ ) ( अ$^{२}$ + ३ )

( ४ ) उदा.—८य$^{२}$ + २य − ३ = $\frac{१}{८}$ (८×८य$^{२}$ + २×८य − ८×३),

( यदीह ८य = अ, तदा )

= $\frac{१}{८}$ (अ$^{२}$ + २अ − २४) = $\frac{१}{८}$(अ + ६) (अ − ४)

$=\frac{१}{८}(८य+६)(८य-४)=\frac{१}{८}\left\{२(४य+३)\times४(२य-१)\right\}$

$=(४य+३)(२य-१)$ इदमेवोत्तरम् ।

(५) उदा — $य^२-७य+१२=य^२-७य+(\frac{७}{२})^२-(\frac{७}{२})^२+१२$

$=य^२-७य+(\frac{७}{२})^२-\frac{४९}{४}+१२=(य-\frac{७}{२})^२-(\frac{१}{२})^२$

$=\left\{(य-\frac{७}{२})+\frac{१}{२}\right\}\left\{(य-\frac{७}{२})-\frac{१}{२}\right\}$

$=(य-३)(य-४)$ इदमेवोत्तरम् ।

(६) उदा.— $८य^२-१०य+३=८(य^२-\frac{१०य}{८}+\frac{३}{८})=८(य^२-\frac{५य}{४}+\frac{३}{८})$

$=८\left\{य^२-\frac{५य}{४}+(\frac{५^२}{८})\right\}-(\frac{२५}{६४}-\frac{३}{८})=८(य-\frac{५}{४})^२-(\frac{१}{८})^२$

$=८(य-\frac{५}{८}+\frac{१}{८})(य-\frac{५}{८}-\frac{१}{८})$

$=८(य-\frac{४}{८})(य-\frac{६}{८})=८(य-\frac{१}{२})(य-\frac{३}{४})$

$=२(य-\frac{१}{२})\times४(य-\frac{३}{४})=(२य-१)(४य-३)$

इदमेवोत्तरम्

वर्गसमीकरणेऽस्य महानुपयोगः ।

(७) उदा.— $३य^२-१२य+१=६य-२३$

अत $(३य^२-१२य+१)-(६य-२३)=०=३य^२-१८य+२४=३(य^२-६य+८)=०$

गुणकावयवपृथक्करणरीत्या० $=३(य-४)(य-२)$ अत्र य−४ वा य−२ अनयोरेकतरेऽस्मिन् शून्ये कल्पिते य=४ वा य=२ एवं भजनापवर्तनादिष्वस्योपयोगः कर्तुं शक्यते ।

## मूलेङ्कितम् ।

कस्यापि मूलं पदमित्युच्यमाने साधारणतया द्विघातमूलं वर्गमूलं वर्गपदं वाऽवगम्यते । एवं घनपदमित्यादि । यथा $\sqrt{अ^२}=अ$, एवम् $\sqrt[३]{अ^३}=अ$ $\sqrt[४]{अ^४}=अ$ इत्यादि सर्वमेतत् पाश्चात्यगणिते Surd इति कथ्यते किन्तु प्राचामिह श्रीमद्भास्करादीनां गणिते करणीकथनाद्वर्गपदमेव ।

यथा–भास्करादीनां नये क२, क३, क५, क६, क७, क८, पाश्चात्ये च $\sqrt{२}$, $\sqrt{३}$, $\sqrt{५}$, $\sqrt{६}$, $\sqrt{७}$, $\sqrt{८}$ अतः क इति वा √ सङ्कुचितनिरचूडमयूरचञ्चुमारभ्यापुच्छमाकारो वर्गमूलं वर्गपदं च पाश्चात्यनये तद्घातापृष्ठसंयोगे घनपदार्थं

वर्गवर्गपदार्थमेवं पञ्चघातपदार्थं तद्घाताङ्का रक्ष्यन्ते यथा $\sqrt[३]{\;}$, $\sqrt[४]{\;}$, $\sqrt[५]{\;}$ .................. ।

यस्य करणीगताङ्कस्य वर्गरूपं खण्डं न भवेदथ यस्य च करणीगताङ्कस्य वर्गरूपं खण्डं भवेत् तत्रावर्गरूपं यदपरं खण्डं सैव मूलकरणी कथ्यते तत्र वर्गरूपकरणीखण्डस्य च मूलाङ्कस्तस्या मूलकरण्या गुणको भवति।

यथा—$\sqrt{१८} = \sqrt{९} \times \sqrt{२} = ३\sqrt{२}$।

यासां मूलकरण्यङ्कस्तुल्यस्ताः सजातीयमूलकरण्यः ।

यथा—$\sqrt{१८}$, $\sqrt{३२}$, $\sqrt{५०}$ एताःसजातीयाः। अत्र मूलकरण्यङ्कः $\sqrt{२}$ सर्वत्र सम एव ।

अव्यक्तवत् सजातीयकरणीनामेव योगोऽन्तरं च भवति ।

यथा—$\sqrt{२०} + \sqrt{२७} + \sqrt{८} + \sqrt{४५} - \sqrt{३२} + \sqrt{४८}$ एतत्स्वरूपस्य किं मानम्। अत्र मूलकरणीविभजनतो रूपम्।

$२\sqrt{५} + ३\sqrt{३} + २\sqrt{२} + ३\sqrt{५} - ४\sqrt{२} + ४\sqrt{३}$

अत्र सजातीयकरणानां योगान्तरतो रूपम् $५\sqrt{५} + ७\sqrt{३} - २\sqrt{२}$ इदमेवोत्तरम्।

अथ कानि चिन् करणीसंबन्धीनि समीकरणानि । यत्र द्विधा अव्यक्तराशयः ।

(१) $२^{य+७} = ४^{य+२} = २^{य+७} = २^{२(य+२)}$

∴ $य + ७ = २य + ४$ ∴ $य = ३$

(२) $(\sqrt{३})^{य+५} = (\sqrt[३]{३})^{२य+५}$, $३^{\frac{य+५}{२}} = ३^{\frac{२य+५}{३}}$

∴ $\frac{य+५}{२} = \frac{२य+५}{३}$ ∴ $३य + १५ = ४य + १०$ ∴ $य = ५$

(३) $२^{३य-२} = ४^{र-१}$ अत $३य - र = २$ ∴ $३^{३य-१} = ३^{३र-१}$

∴ $३य - १ = २र - २$ ∴ $३य - २र = -१ = -३य + २$ ∴ $र = २$ ∴ $य = १$

(४) $९^{३य-१} = (\sqrt{३})^{२र-य}$, $२^{३य} = ४^{र}$ | $३^{२(३य-१)} = ३^{\frac{२र-य}{२}}$, $३^{४य-६} = ३^{\frac{२र-य}{२}}$ ∴ $४य - ६ = \frac{२र-य}{२}$ ∴ $८य - १२ = २र - य$

∴ $९य - २र = १२$।

पुन. $\text{२}^{\text{३य}} = \text{२}^{\text{२र}}$ ∴ $\text{३ य} = \text{२ र}$ ∴ $\text{३ य} - \text{२ र} = \text{०}$

∴ $(\text{९ य} - \text{२}) - (\text{३} - \text{२र}) = \text{१२} - \text{०} = \text{६ य} = \text{१२}$ ∴ $\text{य} = \text{२}, \text{र} = \text{३}$

(५) $\left.\begin{array}{l} (\sqrt{\text{अ}})^{\text{य}+\text{र}} = (\sqrt[3]{\text{अ}})^{\text{र}+\text{ल}+\text{१}} \\ (\sqrt[3]{\text{क}})^{\text{य}+\text{ल}-\text{२}} = (\sqrt[5]{\text{क}})^{\text{र}+\text{ल}} \\ (\sqrt[4]{\text{ग}})^{\text{२र}} = (\sqrt[6]{\text{ग}})^{\text{य}+\text{र}+\text{ल}} \end{array}\right\}$ अत्र य, र, ल एषां मानानि साध्यन्ते ।

$\text{अ}^{\frac{\text{य}+\text{र}}{\text{२}}} = \text{अ}^{\frac{\text{र}+\text{ल}-\text{१}}{\text{३}}}$ ∴ $\frac{\text{य}+\text{र}}{\text{२}} = \frac{\text{र}+\text{ल}-\text{१}}{\text{३}}$ ∴ $\text{३ य} + \text{३र} = \text{२ र} + \text{२ ल} - \text{२}$ ∴ $\text{३ य} + \text{र} - \text{२ल} = -\text{२}$ । $\text{क}^{\frac{\text{य}+\text{ल}-\text{२}}{\text{३}}} = \text{क}^{\frac{\text{र}+\text{ल}}{\text{५}}}$ ∴ $\frac{\text{य}+\text{ल}-\text{२}}{\text{३}} = \frac{\text{र}+\text{ल}}{\text{५}}$ ∴ $\text{५ य} - \text{३ र} + \text{२ ल} = \text{१०}$ । $\text{ग}^{\frac{\text{२र}}{\text{४}}} = \text{ग}^{\frac{\text{य}+\text{र}+\text{ल}}{\text{६}}}$ ∴ $\frac{\text{२र}}{\text{४}} = \frac{\text{य}+\text{र}+\text{ल}}{\text{६}}$ ∴ $\text{१२र} = \text{४ य} + \text{४र} + \text{४ ल}$

∴ $\text{४ य} - \text{८ र} + \text{४ल} = \text{०}$ ∴ $(\text{३ य} + \text{र} - \text{२ ल}) + (\text{५ य} - \text{३ र} + \text{२ल})$
$= -\text{२} + \text{१०} = \text{८ य} - \text{२र} = \text{८}$ ∴ $\text{४ य} - \text{र} = \text{४}$ । $\text{२०} - \text{०}$
$= (\text{१० य} - \text{६ र} + \text{४ ल}) - (\text{४य} - \text{८र} + \text{४ल}) = \text{६ य} + \text{२र} = \text{२०}$
∴ $\text{३ य} + \text{र} = \text{१०}$ ∴ $(\text{४ य} - \text{र}) + (\text{३य} + \text{र}) = \text{४} + \text{१०}$
∴ $\text{७ य} = \text{१४}$ ∴ $\text{य} = \text{२}, \text{र} = \text{४}, \text{ल} = \text{६}$ ।

## अभ्यासार्थं प्रश्नाः ।

(१) कल्प्यते $\text{अ} + \text{क} = \text{५७६०}$, $\text{अ} - \text{क} = \frac{\text{अ}}{\text{३}}$ तदा $\text{अ} = \text{३४५६}$, $\text{क} = \text{२३०४}$ इति कथम् ।

(२) यदि $\frac{\text{२क}+\text{१}}{\text{२}} = \frac{\text{७ क}+\text{५}}{\text{८}}$ तदा कमानम् $= \text{१}$ इति कथम् ।

(३) यदि $\frac{\text{क}+\text{१}}{\text{२}} + \frac{\text{३क}-\text{४}}{\text{५}} + \frac{\text{१}}{\text{८}} = \frac{\text{६क}+\text{७}}{\text{८}}$, तदा $\text{क} = \text{१०}$ इति कथम् ।

(४) „ $(\text{क} + \frac{\text{५}}{\text{२}})(\text{क} - \frac{\text{३}}{\text{२}}) - (\text{क} + \text{५})(\text{क} - \text{३}) + \frac{\text{३}}{\text{४}} = \text{०}$ तदा $\text{क} = \text{१२}$ इति कथम् ।

( ५ ) कोऽसावङ्को यस्य तृतीयसप्तमभागयोर्योगः = २० । उत्तरम् = ४२ ।

( ६ ) यदि अ + क = ७, अ. क = १२ तदा अ = ३, क = १२ कथमिति ।

( ७ ) ,, य$^{२}$ + र$^{२}$ = ६५, य − र = ३ तदा य = ७, − ४, र = ४, − ७ इति कथम् ।

( ८ ) ,, य$^{२}$ + र$^{२}$ = ७४, य.र = ३५ तदा य = ५, ७, −५, −७,
र = ७, ५, −७, −५ इति कथम् ।

( ९ ) ,, य$^{३}$ + र$^{३}$ = ६३७, य + र = १३ तदा य = ८, ५, र = ५, ८ कथम्

( १० ) ,, य − र = − १८, य × र = १३६३ तदा य = २९, − ४७,
र = ४७, − २९ कथम् ।

( ११ ) ,, य$^{३}$ − र$^{३}$ = २१८, य − र = २ तदा य = ७, − ५, र = ५, − ७ कथम् ।

( १२ ) ,, य + र = य$^{२}$, ३ र − य = र$^{२}$ तदा य = ०, २, २ ± √२,
र = ०, २, २ ∓ √२ कथम् ।



# अशुद्धिशुद्धिपत्रम् ।



| अशुद्धिः | शुद्धिः | पृ० | पं० |
| --- | --- | --- | --- |
| तस्या कृतिरवात् | तस्याकृतित्वात् | ४ | २१ |
| ऽर्थात् | ऽर्थात् | ५ | २० |
| या २ रू १ | या ५ं रू १ | ९ | २ |
| पूव- | पूर्वं- | ९ | ८ |
| हाराध | हारार्धं | ९ | ८ |
| या ५ रू १ | या ५ं रू १ | १० | ३ |
| का ४ | का ४ं | ११ | २० |
| फा २ | का २ं | १२ | २ |
| रू १६ | रू १ं६ | १४ | १० |
| क ७५ | क ७ं५ | १४ | ११ |
| ७२ | क ७२ | १७ | १ |
| अनया- | अनयो- | १६ | २० |
| राशी | राशौ | २२ | ५ |
| सिमद्धे- | सिद्धे- | २२ | १४ |
| क-६, -२१कं | कं-६ -२१क | २५ | १६ |
| न्निशेप- | न्निःशेप- | २५ | २२ |
| तौरतः | तौ स्तः | २६ | २ |
| हा. ३ | हां. ३ | २७ | ७ |
| पूव- | पूर्वं- | २९ | १ |
| वसा- | वज्रा- | २९ | १५ |
| ऋर. | ऋण | ३० | १८ |
| राशि | राशिः | ३१ | २७ |
| नानिहारः | नानि हारः | ३२ | १ |
| द्रहा | द्वग्रहा | ३२ | ४ |
| तधद्यथा | तद्यथा | ३२ | ५ |

